तु तत्तन्निमित्तानन्तरमेव । तथा—

अमावास्या पौर्णमासी पुण्यनक्षत्रयुक् तिथिः ।
एत एव त्रयः कालाः सर्वेषां कर्मणां स्मृताः ।।
अद्‌भुतानां सदा कालम् आरम्भः सर्वकर्मणाम् ।।

आभिचारिकाणां तु ग्रामाद् दक्षिणदिशि कृष्णपक्षे कृत्तिकानक्षत्र-प्रयोग इति विशेषः। तथा च कौशिकसूत्रम् । 'आभिचारेषु दक्षिणतः संभारम् आहृत्य आङ्गिरसम्' (कौ० ६।१) इत्यादि । अत्र आङ्गिरसमिति आङ्गिरसकल्पोक्तमित्यर्थः । एतेषां कर्मणां प्राच्योदीच्याङ्गानि दर्शपूर्णमासवत् कार्याणि । 'इमौ दर्शपूर्णमासौ व्याख्यातौ दर्शपूर्णमासाभ्यां पाकयज्ञाः' इति सूत्रकारवचनात् ( कौ० १।६ ) । अत्र पाकयज्ञशब्देन सर्वम् आथर्वणं कर्मोच्यते ।।

**आथर्वणकर्मणामाज्यतन्त्र-पाकतन्त्रेतिभेदात् द्वैविध्य-प्रतिपादनम्**

तच्च द्विविधम् । आज्यतन्त्रं पाकतन्त्रं चेति । यत्र प्रधानं हविः आज्यं तद् आज्यतन्त्रम् । यत्र चरुपुरोडाशादिकं तत् पाकतन्त्रम् । आज्यतन्त्रे अयम् अनुष्ठानक्रमः । प्रथमम् 'अव्यसश्च' [ १९।६५ ] इति कर्तुर्जपः बर्हिर्लवनं वेदिः उत्तरवेदिः अग्निप्रणयनम् अग्निप्रतिष्ठापनम् व्रतग्रहणम् पवित्रकरणम् पवित्रेणेध्मप्रोक्षणम् इध्मोपसमाधानम् बर्हिष्प्रोक्षणम् ब्रह्मासनम् ब्रह्मस्थापनम् स्तरणम् स्तीर्णप्रोक्षणम् आत्मासनम् उदपात्रस्थापनम् आज्यसंस्कारः स्रुवग्रहणम् पुरस्ताद्धोमाः आज्यभागौ । 'सविता प्रसवानाम् [ ५ । २४ ] इति कर्मणि अभितोभ्यातानैराज्यं जुहुयात्' [ कौ० १४,१ ] इति सूत्रकारवचनात् अभ्यातानानि । एतदन्तं पूर्वतन्त्रम् ।।

ततो यथोपदेशं प्रधानहोमः ।। तत उत्तरतन्त्रम् अभ्यातानानि पार्वणहोमः समृद्धिहोमः संनतिहोमः स्विष्टकृद्धोमः सर्वप्रायश्चित्तीयहोमः स्कन्नहोमः 'पुनर्मैत्विन्द्रियम्' [ ७।६९ ] इति होमः स्कन्नास्मृतिहोमौ संस्थितिहोमाः चतुर्गृहीतहोमः बर्हिर्होमः संस्रवहोमः विष्णुक्रमा व्रतविसर्जनम् दक्षिणादानम् ब्रह्मोत्थापनम् इति । पाकतन्त्रे तु अभ्यातानाभाव एव विशेषः । अन्यत् सर्वं समानम् । तथा गोपथब्राह्मणम्—

आज्यभागान्तं पाकतन्त्रम् ऊर्ध्वं स्विष्टकृता सह ।
हवींषि यज्ञ आवापो यथा तन्त्रस्य तन्तवः ।।

अद्‌भुतकर्मणाम् आज्यतन्त्रत्वेऽपि पाकतन्त्रवद् अभ्यातानाभावः । यद् आह केशवः । 'पाकतन्त्रेष्वभ्यातानानि न भवन्ति, अद्‌भुतेषु न भवन्ति, अन्यत्र सर्वत्र भवन्ति' इति [ के० १४।१ ]

इति सायणाचार्यकृता अथर्ववेदभाष्यभूमिका समाप्ता ।

**समाप्तोऽयं चतुर्वेदभाष्यभूमिकाभिधानो ग्रन्थः ॥**

# परिशिष्ट ( १ )

## ग्रन्थस्थविषयाणामक्षरक्रमेणानुक्रमणी

विषय | पृष्ठ

# परिशिष्ट ( २ )

## पारिभाषिकशब्दानामकारादिक्रमेण

### सूची

# परिशिष्ट ( ३ )

## भाष्यभूमिकासु निर्दिष्टानां ग्रन्थानां ग्रन्थकाराणां च

## सूची

# परिशिष्ट ( ४ )

## भाष्यभूमिकास्थितोद्धरणानां वर्णक्रमेण

## सूची